# अष्टाङ्गनिघण्टु

https://sa.wikisource.org/s/da7

सर्वज्ञाय नमस्कृत्य द्रव्याणां गूढवाचिनाम् । (१.१)
अष्टाङ्गसंग्रहोक्तानां निघण्टुर् अभिधीयते ॥ (१.२)

विदारीपञ्चाङ्गुलवृश्चिकालीवृश्चीवदेवाह्वयशूर्पपर्ण्यः । (२.१)
कण्डूकरी जीवनाह्रस्वसंज्ञे द्वे पञ्चके गोपसुता त्रिपादी ॥ (२.२)

विदार्यादिर् अयं हृद्यो बृंहणो वातपित्तहा । (३.१)
शोषगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गणः ॥ (३.२)

विदारी गजवाजीष्टा वृषगन्धेक्षुगन्धिका । (४.१)
शृगालिका पुष्पवल्ली शुक्लकन्दा पलाशिका ॥ (४.२)

क्षीरेक्षुवल्लीगन्धान्या क्षीरशुक्ला पयस्विनी । (५.१)
वल्लीपलाशिका क्षीरविदारी श्रेष्ठकन्दकः ॥ (५.२)

पञ्चाङ्गुलो वर्धमानश् चित्रो गन्धर्वहस्तकः । (६.१)
उरुवूकस् तथैरण्ड आमण्डो वातनाशनः ॥ (६.२)

रक्तैरण्डो द्वितीयस् तु व्याघ्रो व्याघ्रतलोपमः । (७.१)
नक्राहिदंष्ट्रिका कोली वृश्चिकाल्य् उष्ट्रधूमकः ॥ (७.२)

कालेयी धूम्रपत्त्रोष्ट्रा विशल्या सर्पदंष्ट्रिका । (८.१)
पुनर्नवा वर्षकेतुः वृश्चीवः श्वेतमूलकः ॥ (८.२)

वर्षाभूः दीर्घपत्त्रा च विकसस् तु कठिल्लकः । (९.१)
सुनाडिको रक्तपुष्पो विशाखो मण्डलच्छदः ॥ (९.२)

सहदेवा महागन्धा देवगन्धा बलाह्वया । (१०.१)
गाङ्गेरुकी नागबला खरबन्धा निशाह्वया ॥ (१०.२)

विश्वदेवा झषा काला तथा चाश्वगवेधुका । (११.१)
मुद्गपर्णी सहा सूप्यपर्णी मार्जारगन्धिका ॥ (११.२)

काकमुद्गा क्षुद्ररसा चास्रपित्तहरा सरा । (१२.१)
पिशाची सिंहविन्ना च माषपर्णी महासहा ॥ (१२.२)

मर्कटी चात्मगुप्ता च कण्डूकृत् कपिकच्छुरा । (१३.१)
वृष्यबीजा गलेकण्डूकरी शार्दुलविग्रहा ॥ (१३.२)

प्हणिजिह्वापर्ण्य् अभीरुः पीवरीन्दीवरी वरी । (१४.१)
सूक्ष्मपत्त्रा द्वीपिशत्रुः शतमूली शतावरी ॥ (१४.२)

काकोली कवरी वीरा ध्वाङ्क्षोली क्षीरशुक्लिका । (१५.१)
जीवन्ती जीवनी जीवा शाकश्रेष्ठा सुमङ्गला ॥ (१५.२)

पयस्या पयसी पोटगला ज्ञेयार्कपुष्पिका । (१६.१)
जीवकः कूर्चनिभस् तु वृषाणी वृषभो वृषः ॥ (१६.२)

पृश्निपर्णी पृथक्पर्णी धावनी कलशी गुहा । (१७.१)
शृगालविन्ना लाङ्गूली स्थिरा क्रोष्टुकपुच्छिका ॥ (१७.२)

विदारिगन्धांशुमती शालपर्णी स्थिरा ध्रुवा । (१८.१)
त्रिपर्ण्य् अतिगुहा सौम्या महाक्षी तन्विका मता ॥ (१८.२)

व्याघ्री निदिग्धिका क्षुद्रा द्रावणी कण्टकारिका । (१९.१)
सिंहा च क्षुद्रवार्त्ताकी बृहती बहुपुत्रिका ॥ (१९.२)

वार्ताकी हिङ्गुली सिंही भाण्टाकी दुष्प्रधर्षिणी । (२०.१)
गोकण्टको गोक्षुरकः श्वदंष्ट्रा च त्रिकण्टकः ॥ (२०.२)

कन्या गोपी कृष्णवल्ली सारिवा प्हाणिजिह्विका । (२१.१)
सुगन्धिमूला भद्रा च सुगन्धा गोपवल्ल्य् अपि ॥ (२१.२)

हंसपादी रक्तपादी त्रिपादी कीटमारिका । (२२.१)
धृतराष्ट्रपदी चैव मृतमन्दातिपर्णिका ॥ (२२.२)

सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम् । (२३.१)
यष्टी परुषकं हन्ति दाहपित्तास्रतृड्ज्वरान् ॥ (२३.२)

सारिवादिगणं वक्ष्ये पुरा प्रोक्ता तु सारिवा । (२४.१)
वीरण्याभयलामज्जकोशीरम् अमृणालकम् ॥ (२४.२)

वीरं वीरणमूलं च बहुमूलं रणप्रिया । (२५.१)
काश्मर्यभीरुः श्रीपर्णी काश्मर्यं कट्प्हलं तथा ॥ (२५.२)

डोलाप्हलस् तीक्ष्णसारो मधूको गुडपुष्पकः । (२६.१)
मधुपुष्पो लोध्रपुष्पो वानप्रस्थो मधुद्रुमः ॥ (२६.२)

ज्ञेयो मधूलसंज्ञो ऽपि मधूको वारिसंस्थितः । (२७.१)
छदे ह्रस्वस् तैलपुष्पस् तुल्यस् तु रसवीर्यतः ॥ (२७.२)

भद्रश्रियं मलयजं गोशीर्षं श्वेतचन्दनम् । (२८.१)
कुचन्दनं ताम्रवर्णं लोहितं रक्तचन्दनम् ॥ (२८.२)

यष्टी मधुकयष्ट्याह्वा मधुकं क्लीतकाह्वयम् । (२९.१)
परुषको मृदुप्हलो रोषजो धन्वनच्छदः ॥ (२९.२)

कृष्णाग्रन्थिककाकमाचिचविकाविश्वौषधाजाजिभिः पाठारामठरेणुकागजकणासिद्धार्थचित्रोषणैः । (३०.१)
स्पृक्का जात्यजमोदहिङ्गुत्रुटिभिः भार्ङ्गीविलङ्गान्वितैः एभिर् विंशतिभिः कप्हामयहरः कृष्णादिको ऽयं गणः ॥ (३०.२)

पिप्पली मागधी कृष्णा वैदेही चपला कणा । (३१.१)
उपकुल्या कौलनामा शौण्डी स्यात् तीक्ष्णतण्डुला ॥ (३१.२)

काकमाची गुच्छप्हला स्वर्या मरिचिका प्हला । (३२.१)
काकोली चविका चव्यं ग्रन्थिला कोलवल्लिका ॥ (३२.२)

शुण्ठी महौषधं विश्वं नागरं विश्वभेषजम् । (३३.१)
अजाजी जीरकं माता मेध्यं स्याद् औत्तरापथम् ॥ (३३.२)

कृष्णजीरेति काकोली कालिकोद्गारशोधनी । (३४.१)
जीरणा कारभी योनिशूलघ्नी चोपकुञ्चिका ॥ (३४.२)

मालवी त्रिशिरा पाठा प्राचीना वृत्तपर्णिका । (३५.१)
अम्बष्ठा स्थापनी वीरा बोधकी च कुचेलिका ॥ (३५.२)

जन्तुघ्नं जरणं हिङ्गु भूतघ्नं वस्तिहिंसकः । (३६.१)
कपिला रेणुका कौन्ती राजपुत्री हरेणुका ॥ (३६.२)

श्रेयसी स्याद् गजकणाकृत्रिमाचविकाप्हला । (३७.१)
आसुरी सर्षपो राजी नासासंवेदनः कटुः ॥ (३७.२)

सिद्धार्थको भूतनाशो रक्षोघ्नः श्वेतसर्षपः । (३८.१)
तिला कट्वी मत्स्यपित्ता कटुका शकुलादनी ॥ (३८.२)

वल्लीजं यवनेष्टं स्यान् मरिचं तीक्ष्णम् ऊषणम् । (३९.१)
स्पृक्का स्पृक् ब्राह्मणी देवी पिशुना च लता सती ॥ (३९.२)

जातीप्हलं मज्जसारं जाती मदनशौण्डिकौ । (४०.१)
अजमोदा खराह्वा च बस्तमोदा च मर्कटी ॥ (४०.२)

एला तु द्राविडी तुत्था सूक्ष्मैला बहुला त्रुटिः । (४१.१)
भार्ङ्गी गर्दभशाकं च पद्मा ब्राह्मणयष्टिका ॥ (४१.२)

पद्मकपुण्ड्रौ वृद्धितुगर्द्धयः शृङ्ग्य् अमृता दश जीवनसंज्ञाः । (४२.१)
स्तन्यकरा घ्नन्तीरणपित्तं प्रीणनजीवनबृंहणवृष्याः ॥ (४२.२)

पद्मकादिगणं वक्ष्ये हेमपद्मं तु पद्मकम् । (४३.१)
प्रपौण्डरीकं श्रीपुष्पं पुण्ड्राह्वं मूलसाधनम् ॥ (४३.२)

वृद्धिस् तु श्रावणी पुष्टिः महावृद्धिः परोच्यते । (४४.१)
तवक्षीरी तुषा शुभ्रा वंशाख्या वंशरोचना ॥ (४४.२)

शृङ्गी स्मृता महाघोषा ज्ञेया कर्कटशृङ्गिका । (४५.१)
गुडूची कुण्डली छिन्नरुहा काण्डोद्भवामृता ॥ (४५.२)

मधुपर्णी वयःस्था च मण्डली तन्त्रिका स्मृता । (४६.१)
शल्यपर्णी मणिच्छिद्रा मेदा मेदःसमुद्भवा ॥ (४६.२)

महामेदा वृक्षरुहा महापुरुषदन्तिका । (४७.१)
दशानां जीवनीयानां संज्ञा तु परिकीर्तिता ॥ (४७.२)

परुषकं वरा द्राक्षा कट्प्हलं कतकात् प्हलात् । (४८.१)
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित् ॥ (४८.२)

परुषादिगणं वक्ष्ये पुरा प्रोक्तं परुषकम् । (४९.१)
वरोत्तमा च त्रिप्हला श्रेष्ठा चापि प्हलत्रयम् ॥ (४९.२)

प्राणदा पूतनामोघा हरीतक्य् अभया जया । (५०.१)
पथ्यामृता हैमवती कायस्था रोहिणी स्मृता ॥ (५०.२)

अक्षः कलिः कर्षप्हलो विन्ध्यजातो विभीतकः । (५१.१)
कोरङ्गको मृदुप्हलो धात्री चामलकी शिवा ॥ (५१.२)

रोहिणी खट्वला प्रोक्ता द्राक्षा मृदुप्हला तथा । (५२.१)
मृद्वीका तूत्तमप्हला गोस्तनी चौत्तरापथा ॥ (५२.२)

हेमवल्को महावल्को भद्रवृक्षश् च कीर्तितः । (५३.१)
कतकस्य प्हलं कात्यं ज्ञेयं वारिप्रसादनम् ॥ (५३.२)

राजादनं क्षीरशुक्लं राजाह्वं वानरप्रियम् । (५४.१)
शुकेष्टं दाडिमं चैव रक्तबीजप्हलाह्वयम् ॥ (५४.२)

स्वाद्वम्लं रोचनं चैव द्वितीयम् अम्लदाडिमम् । (५५.१)
बृहच्छदस् तथा शाको वरदारुः खरच्छदः ॥ (५५.२)

अञ्जनं प्हलिनी मांसी पद्मोत्पलरसाञ्जनम् । (५६.१)
सैलामधुकनागाह्वं विषान्तर्दाहपित्तनुत् ॥ (५६.२)

स्मृतं स्रोतोञ्जनं वीरम् अञ्जनं यामुनं तथा । (५७.१)
स्रोतोद्भवम् अथो नाद्यं सौवीरं नेत्रभूषणम् ॥ (५७.२)

प्हलिनी कोलगिरिका श्यामा कान्ता प्रियङ्गुका । (५८.१)
पिशाची नलदं मांसी जटिला भूतकेशिनी ॥ (५८.२)

नलिनं पुष्करं पद्मम् अरविन्दं कुशेशयम् । (५९.१)
पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ (५९.२)

बिसप्रसूनराजीवजलजाम्भोरुहाणि च । (६०.१)
इन्दीवरं कुवलयं नीलं नीलोत्पलं तथा ॥ (६०.२)

सौगन्धिकं तु कल्हारं रक्तोत्पलसुगन्धिके । (६१.१)
द्रवाह्वम् अमृतासङ्गकृतं तार्क्ष्यो रसाञ्जनम् ॥ (६१.२)

एला तु द्राविडी प्रोक्ता बहुला त्रुटिसंज्ञका । (६२.१)
हेमपुष्पं तु नागाह्वं केसरं नागकेसरम् ॥ (६२.२)

पटोलकटुरोहिणीचन्दनं मधुस्रवगुडूचीपाठान्वितम् । (६३.१)
निहन्ति कप्हपित्तकुष्ठज्वरान् विषं वमिम् अरोचकं कामलाम् ॥ (६३.२)

पटोलादिस् तु राजीमत् कुलकं च पटोलकम् । (६४.१)
खरच्छदः पाण्डुप्हलो राजमान्यो ऽमृताप्हलः ॥ (६४.२)

पीलुपर्णी मधुरसा मूर्वा चातिरसा स्मृता । (६५.१)
मधुस्रवा पीलुपत्त्रा मोरटी क्षीरमोरटम् ॥ (६५.२)

गुडूचीपद्मकारिष्टधानकारक्तचन्दनम् । (६६.१)
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नम् अग्निकृत् ॥ (६६.२)

निम्बो ऽरिष्टो गुडूच्यादौ पिचुमान्दः शुकप्रियः । (६७.१)
धान्या कुस्तुम्बुरुः धान्यं धनिका धान्यकं तथा ॥ (६७.२)

आरग्वधेन्द्रयवपाटलिकाकतिक्तानिम्बामृतामधुरसास्रुववृक्षपाठाः । (६८.१)
भूनिम्बसैर्यकपटोलकरञ्जयुग्मसप्तच्छदाग्निसुषवीप्हलबाणघोण्टाः ॥ (६८.२)

आरग्वधादिर् जयति छर्दिकुष्ठविषज्वरान् । (६९.१)
कप्हं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः ॥ (६९.२)

आरग्वधो राजवृक्षः शम्याकश् चतुरङ्गुलः । (७०.१)
आरेवतो व्याधिघातः प्रग्रहः कृतमालकः ॥ (७०.२)

कलिङ्गकस् त्व् इन्द्रयवो वत्सकः कौटजं प्हलम् । (७१.१)
पाटली दीर्घवृत्ता च स्थल्यामोघाम्बुवासिनी ॥ (७१.२)

वृत्ततुण्डा काकतिक्ता शार्ङ्गेष्टाङ्गारवल्लिका । (७२.१)
व्याघ्रपादः स्रुवतरुः स्वादुकण्टो विकङ्कतः ॥ (७२.२)

किराततिक्तो भूनिम्बः कतृणः काण्डतिक्तकः । (७३.१)
सैर्यकस् तु सहचरः सर्यको मृदुपुष्पकः ॥ (७३.२)

बाणः स्मृतो नीलपुष्पः धीरशौर्यकघोश्वराः । (७४.१)
पूतिकरञ्जः कैडर्यः प्रकीर्यश् चिरबिल्वकः ॥ (७४.२)

उदकीर्यो नक्तमालः करञ्जो लाजपुष्पकः । (७५.१)
सप्तच्छदो ऽयुग्मपत्रः सप्ताह्वो गुच्छपुष्पकः ॥ (७५.२)

चित्रको द्वीपिसंज्ञस् तु वह्निपर्यायवाचकः । (७६.१)
रक्तचित्रस् तथान्यस् तु महाङ्गः कालमूलकः ॥ (७६.२)

पानीयवल्ली सुषवी बृहद्वल्ल्य् उत्पलच्छदा । (७७.१)
गालो राठो ऽथ मदनः पिण्डीतः करहाटकः ॥ (७७.२)

शल्यकैडर्यवृक्षः स्याच् छर्दनस् तगरः प्हलम् । (७८.१)
घोण्टो मुण्ठगोपघोण्टौ पद्मकी मर्कटाह्वया ॥ (७८.२)

असनतिनिशभूर्जश्वेतवाहप्रकीर्या खदिरकदरभण्डीशिंशपामेषशृङ्ग्यः । (७९.१)
त्रिहिमतलपलाशाः जोङ्गकः शाकशालौ क्रमुकधवकलिङ्गच्छागकर्णाश्वकर्णाः ॥ (७९.२)

असनादिर् विजयते श्वित्रकुष्ठकप्हक्रिमीन् । (८०.१)
पाण्डुरोगं प्रमेहं च मेदोदोषनिबर्हणः ॥ (८०.२)

असनादौ पीतसारः प्रियको बीजको ऽसनः । (८१.१)
स्यन्दनः स्तिमितो नेमिः रथद्रुः सर्वसाधकः ॥ (८१.२)

भूर्जो भुर्जो बहुपुटो मृदुत्वक् चास्थिरच्छदः । (८२.१)
पार्थो ऽर्जुनः श्वेतवाहः ककुभः प्हाल्गुनाह्वयः ॥ (८२.२)

गायत्री खदिरो गीता कुष्ठघ्नो बालपत्त्रकः । (८३.१)
कदरः खदिरः सारः कोटरी श्यामसारकः ॥ (८३.२)

भण्डी शुकद्रुः प्लवंगः शिरीषो मृदुपुष्पकः । (८४.१)
कपिला शिंशपा कृष्णसारो मण्डलपत्त्रकः ॥ (८४.२)

बस्तान्त्री मेषशृङ्गी च चक्षुष्या बहुलाङ्गिका । (८५.१)
कालेयकं पीतसारं तृतीयं वर्णकृद्धिमम् ॥ (८५.२)

ताडस् तालो दीर्घतरुस् तृणराजस् त्रिबीजकः । (८६.१)
पलाशः किंशुको वातरोधो ब्रह्मतरुः पटुः ॥ (८६.२)

जोङ्गकः शीतशमनो लोहनामागरुः स्मृतः । (८७.१)
सजह्विः श्रीकरः शालो रसो निर्यासरालकौ ॥ (८७.२)

धवो दृढतरुर् गौरः शकटाक्षो मरूद्भवः । (८८.१)
क्रमुकं कैवुकं पूगं कषायं मधुराह्वयम् ॥ (८८.२)

श्वेतघ्नः शीतशमनः बस्तकर्णो ऽजकर्णकः । (८९.१)
शस्यसंवरणः शूरः कुशिकश् चाश्वकर्णकः ॥ (८९.२)

वरुणसैर्यकयुग्मशतावरीदहनमोरटबिल्वविषाणिकाः । (९०.१)
द्विबृहतीद्विकरञ्जजयाद्वयं बहलपल्लवदर्भरुजाकराः ॥ (९०.२)

वरुणादिः कप्हं मेदो मन्दाग्नित्वं नियच्छति । (९१.१)
आढ्यवातं शिरःशूलं गुल्मं चान्तः सविद्रधिम् ॥ (९१.२)

वरुणादौ श्वेतपुष्पो वरुणो वरणः स्मृतः । (९२.१)
शटालवृक्षो बिल्वो ऽस्त्री पूतिवातो महाप्हलः ॥ (९२.२)

मालूरः श्रीप्हलः शैवः शाण्डिल्यः श्रीनिवासकः । (९३.१)
महाकाल्यजशृङ्गी च कूर्चपर्णी विषाणिका ॥ (९३.२)

जयाग्निमन्थो ऽरणिका तक्कारी वैजयन्तिका । (९४.१)
शिग्रुः शोभाञ्जनस् तीक्ष्णगन्धो बहलपल्लवः ॥ (९४.२)

मुरङ्गी शिग्रुको रक्तपुष्पो मधुरशिग्रुकः । (९५.१)
तृतीयो मधुरः सिंशकेसरो मधुशिग्रुकः ॥ (९५.२)

सितं तीक्ष्णं शिग्रुबीजं श्वेताङ्गं मरिचाह्वयम् । (९६.१)
दर्भः कुशो लवः स्थूलः सूक्ष्मो वेदपवित्रकः ॥ (९६.२)

रुजाकरस् त्व् आर्तगलो हुंकारो भीषणाह्वयः । (९७.१)
जालवृक्षो दुष्प्रधर्षः स्वादुतिक्तफ्हलः स्मृतः ॥ (९७.२)

ऊषकस् तुत्थकं हिङ्गु कासीसद्वयसैन्धवम् । (९८.१)
सशिलाजतु कृच्छ्राश्मगुल्ममेदःकफ्हापहम् ॥ (९८.२)

ऊषकादौ तु वृषको वूषको रुचकाह्वयः । (९९.१)
ऊषो निःसारकः सिंहो मूत्रवृद्धिकरः स्मृतः ॥ (९९.२)

कठिनं तुत्थकं द्वेधा कर्परं बर्हिकण्टकम् । (१००.१)
जन्तुघ्नं जरणं हिङ्गु रामठं भूतनाशनम् ॥ (१००.२)

कासीसं पांशुधावाख्यं द्वितीयं पुष्पसंज्ञकम् । (१०१.१)
सैन्धवं माणिमन्थं च नादेयं लवणोत्तमम् ॥ (१०१.२)

शिलाजं धातुजं ज्ञेयं मन्दरोत्थं शिलाजतु । (१०२.१)
पार्वतं शैलनिर्यासः गिरिजं च शिलाह्वयम् ॥ (१०२.२)

वेल्लन्तरारणिकबूकवृषाश्मभेदगोकण्टकोत्कटसहाचरबाणकाशाः । (१०३.१)
वृक्षादनीनलकुशद्वयगुण्ठगुन्द्राभल्लूकमोरटकुरण्टकरम्भपार्थाः ॥ (१०३.२)

वर्गो वीरतराद्यो ऽयं हन्ति वातकृतान् गदान् । (१०४.१)
अश्मरीशर्करामूत्रकृच्छ्राघातरुजाहरः ॥ (१०४.२)

वेल्लन्तरो वीरतरुर् गणे वीरतरादिके । (१०५.१)
वसुकः स्थूलपुष्पश् च बुकश् चेश्वरमल्लिका ॥ (१०५.२)

सिंहास्यः कर्कटश् चैव वृषकश् चाटरूषकः । (१०६.१)
वेणुपत्त्री वृषा पार्वी पर्वणी वंशपत्त्रिका ॥ (१०६.२)

अश्मभेदी शिलाभेदी ज्ञेया पाषाणभेदिका । (१०७.१)
उत्कटा सूक्ष्मपत्त्रा च दीर्घलोहितयष्टिका ॥ (१०७.२)

शरेक्षुकुसुमौ बाणः स काण्डेक्षुनिभाङ्घ्रिकः । (१०८.१)
श्वेतचामरकः काशो गुन्द्रा स्याद् गुच्छपुष्पिका ॥ (१०८.२)

वृक्षादनी तु शिखरो वन्दाकः कामवृक्षकः । (१०९.१)
मृदुपुष्पो ऽथ सुषिरो नदीस्थो नलको नलः ॥ (१०९.२)

गुण्ठो वृत्ततृणः शुण्ठः शृङ्गवेराभमूलकः । (११०.१)
भल्लूको भूतवृक्षश् च श्योनाकश् चैव टुण्टुकः ॥ (११०.२)

श्रीहस्तिनी कुरटका पिचुकः शितिवारकः । (१११.१)
कृष्णसूक्ष्मफ्हला युक्तपुष्पा मस्तकमञ्जरी ॥ (१११.२)

करम्भः कर्कशो युग्मफ्हला चोत्तमकन्यका । (११२.१)
कपोतवङ्का वरदा रविभक्ता सुवर्चला ॥ (११२.२)

रोध्रशाबरकरोध्रपलाशाः जिङ्गिणीसरलकट्फलयुक्ताः । (११३.१)
कुत्सिताम्बकदलीगतशोकाः सैलवालुपरिपेलवमोचाः ॥ (११३.२)

एष रोध्रादिको नाम मेदःकफहरो गणः । (११४.१)
योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ (११४.२)

लोध्रादौ तिल्वको लोध्रस् तिरीटः पट्टिकाह्वयः । (११५.१)
द्वितीयः शाबरः श्वेतो घनत्वक् चाक्षिभेषजः ॥ (११५.२)

जिङ्गिणी झिङ्गिणी ज्ञेया मोचकी गुडमञ्जरी । (११६.१)
पूतिकाष्ठं देववृक्षः सरलो देवदारुकः ॥ (११६.२)

सुरकाष्ठं भद्रदारुः देवपर्यायवाचकः । (११७.१)
सुगन्धा सुवहा रास्ना युक्ताह्वा गन्धनाकुली ॥ (११७.२)

सुरभिश् च कदम्बश् च कुञ्चिताङ्गो हरिप्रियः । (११८.१)
रम्भा तु कदली मोचा वृत्तपुष्पांशुमत्फला ॥ (११८.२)

अशोको विगतशोकः सुभगस् ताम्रपल्लवः । (११९.१)
एलवालुकम् ऐलेयं बालेयं हरिवालुकम् ॥ (११९.२)

कुटन्नटं प्लवंगं च वितुन्नं परिपेलवम् । (१२०.१)
सुरभिः सल्लकी मोचा महारम्भा गजप्रिया ॥ (१२०.२)

अर्कालर्कौ नागदन्ती विशल्या भार्ङ्गी रास्ना वृश्चिकाली प्रकीर्या । (१२१.१)
प्रत्यक्पुष्पी पीततैलोदकीर्या श्वेतायुग्मं तापसानां च वृक्षः ॥ (१२१.२)

अयम् अर्कादिको वर्गः कफमेदोविषापहः । (१२२.१)
कृमिकुष्ठप्रशमनो विशेषाद् व्रणशोधनः ॥ (१२२.२)

अर्कादौ तु सदापुष्पा सूर्याह्वार्कस् तु रूपिका । (१२३.१)
मन्दारः श्वेतकुसुमो ऽलर्को विकरणः स्मृतः ॥ (१२३.२)

नागदन्ती श्वेतघण्टा नागिनी पूर्वपुष्पिका । (१२४.१)
विशल्या हलिनी वह्निजिह्वा लाङ्गलिका स्मृता ॥ (१२४.२)

भार्ङ्गी फञ्जी च पालिन्दी द्विजयष्टिः सुगन्धिका । (१२५.१)
अपामार्गः शैखरिकः प्रत्यक्पुष्पी मयूरकः ॥ (१२५.२)

काकादनी पीततैला वेगा काकाण्डकी तथा । (१२६.१)
ज्योतिष्मती पीततैला वेगा कङ्गुणिका स्मृता ॥ (१२६.२)

श्वेता सुनाभिः कटभी किणिही मधुरेणुका । (१२७.१)
कटंभरा महाश्वेता कालिन्दी कटभी सिता ॥ (१२७.२)

कुमार्याख्या महाश्वेता वन्ध्या कर्कोटकी तथा । (१२८.१)
इङ्गुदस् तिक्तमञ्जा च पीलुकस् तापसद्रुमः ॥ (१२८.२)

सुरसयुगफणिज्जं कालमाला विडङ्गं खरबुसवृषकर्णी कट्फलं कासमर्दः । (१२९.१)
क्षवकसरसिभार्ङ्गीकार्मुकाः काकमाची कुलहलविषमुष्टी भूस्तृणो भूतवेशी ॥ (१२९.२)

सुरसादिर् गणः श्लेष्ममेदःकृमिनिषूदनः । (१३०.१)
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ (१३०.२)

सुरसादौ गणे द्वेधा सुरा कृष्णगौरतः । (१३१.१)
स्वादुगन्धिच्छदा चैव कायस्था तुलसी तथा ॥ (१३१.२)

फ्हणिज्जको मञ्जरीकस् तीक्ष्णगन्धः सुगन्धिकः । (१३२.१)
कृष्णसर्जकः कालमालः वठिञ्जरकुठेरकौ ॥ (१३२.२)

विडङ्गं कृमिजिद् बल्यं किरीटं श्वेततण्डुलम् । (१३३.१)
शूकात्मकः खरबुसौ मरुवः खरपत्त्रकः ॥ (१३३.२)

वृषकर्ण्याखुकर्णी च तथा भूमिपरिश्रया । (१३४.१)
राजक्षवः पीतपुष्पः कासघ्नं कासमर्दकः ॥ (१३४.२)

उद्वेगजननस् तीक्ष्णः क्षवकः क्षुद्विबोधकः । (१३५.१)
कपित्थपत्त्री झरसी निर्झरा झरपत्त्रिका ॥ (१३५.२)

प्राचीना बोधकी कान्ता कामुका रक्तमञ्जरी । (१३६.१)
माधवी स्याद् अमुक्तश् च सुवसन्तो ऽतिमुक्तकः ॥ (१३६.२)

काकमाची गूढफ्हला काकाह्वा माचिकापि च । (१३७.१)
वोलो वृद्धः कुलहलो जम्बूलो भूकदम्बकः ॥ (१३७.२)

विषमुष्टिश् च कर्कोटी क्षयाह्वा केशमुष्टिका । (१३८.१)
पुत्राञ्जलिः भूतकेशी भूस्तृणो गुह्यबीजकः ॥ (१३८.२)

भूतावेशी भूतकेशी निर्गुण्डी तिन्दुवारकः । (१३९.१)
शेफ्हालिका श्वेतपुष्पा श्वेतनिर्गुण्डिका स्मृता ॥ (१३९.२)

मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशपाः । (१४०.१)
गुल्ममेहाश्मरीपाण्डुमेदोऽर्शःकफ्हशुक्रजित् ॥ (१४०.२)

मुष्ककादौ तु शिखरी मुष्कको मोक्षकस् तथा । (१४१.१)
कालमुष्कः क्षारवृक्षः क्षीणवारिफ्हलः स्मृतः ॥ (१४१.२)

सुधा वज्री महावृक्षो ग्रन्थिला स्नुग् गुडा स्नुही । (१४२.१)
समन्तदुग्धा श्वजिह्वपत्रश् च युग्मकण्टकः ॥ (१४२.२)

वत्सकमूर्वाभार्ङ्गीकटुका मरीचं घुणप्रिया च गण्डीरम् । (१४३.१)
एला पाठा जाजी कट्वङ्गफ्हलाजमोदसिद्धार्थवचाः ॥ (१४३.२)

जीरकहिङ्गुविडङ्गं पशुगन्धा पञ्चकोलकं हन्ति । (१४४.१)
चलकफ्हमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः ॥ (१४४.२)

वनतिक्तो वत्सकादौ कुटजो गिरिमल्लिका । (१४५.१)
वृक्षकः शक्रवृक्षश् च वत्सकः कुटजस् तथा ॥ (१४५.२)

भङ्गुरातिविषा माद्री शुक्लकन्दा घुणप्रिया । (१४६.१)
द्वितीया तु प्रतिविषा श्वेतरक्तविषा मता ॥ (१४६.२)

दीर्घवृन्तो महानिम्बः कट्वङ्गो ऽरलुतिक्तकः । (१४७.१)
दीप्यकं त्व् अजमोदस् तु यवानी जरणाह्वया ॥ (१४७.२)

वचोग्रगन्धा जटिला षड्ग्रन्था हैमवत्यपि । (१४८.१)
शुक्ला या सा स्वादुकन्दा सुवासा हिमसंभवा ॥ (१४८.२)

वचाजलददेवाह्वनागरातिविषामयाः । (१४९.१)
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ (१४९.२)

वचाहरिद्रादिगणाव् आमातीसारनाशनौ । (१५०.१)
मेदःकफ्हाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ (१५०.२)

वचादौ प्राग् वचा प्रोक्ता मुस्ता तु जलदाह्वया । (१५१.१)
गाङ्गेयी कुरुविन्दा च देवाह्वा भद्रमुस्तकम् ॥ (१५१.२)

हरिद्रादिगणं वक्ष्ये गौरी श्यामा च निर्विषा । (१५२.१)
निशा क्षपा च रात्रिश् च वरा लोमशमूलिका ॥ (१५२.२)

स्वर्णवर्णा हरिद्रा तु निशाह्वा रजनी तथा । (१५३.१)
दार्वी कटंकटेरी च पर्जन्या च पचम्पचा ॥ (१५३.२)

प्रियङ्गुपुष्पाञ्जनयुग्मपद्माः पद्माद्रजो योजनवल्ल्यनन्ता । (१५४.१)
मानद्रुमो मोचरसः समङ्गा पुन्नागशीतं मदनीयहेतुः ॥ (१५४.२)

अम्बष्ठा मधुकं नमस्करी नन्दीवृक्षपलाशकच्छुरा । (१५५.१)
रोध्रं धातकिबिल्वपेशिके कट्वङ्गं कमलोद्भवं रजः ॥ (१५५.२)

गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ । (१५६.१)
सन्धानीयौ हितौ पित्ते व्रणानाम् अपि रोपणौ ॥ (१५६.२)

प्रियङ्ग्वादिगणे पूर्वं प्रियङ्गुः समुदाहृता । (१५७.१)
पद्मासितारविन्दा च चारटी पद्मचारिणी ॥ (१५७.२)

रजः परागं किञ्जल्कं केसरं पद्मसंभवम् । (१५८.१)
मञ्जिष्ठा विजया रक्ता समङ्गा विकसारुणा ॥ (१५८.२)

मञ्जुका रक्तयष्टी च ताम्रा योजनवल्ल्य् अपि । (१५९.१)
अनन्ता दीर्घमूला च समुद्रान्तो यवासकः ॥ (१५९.२)

सारद्रुः शाल्मली मोचा पुराणी रक्तपुष्पिका । (१६०.१)
निर्यासो यस् तु शाल्मल्याः स मोचरससंज्ञकः ॥ (१६०.२)

समङ्गा शतपत्त्रा च तथैवाञ्जलिकारिका । (१६१.१)
नमस्कारी रक्तमूला तथा पुष्पावरोधिका ॥ (१६१.२)

पुंनागः पुरुषाह्वश् च तुङ्गाख्यो रक्तकेसरः । (१६२.१)
नमेरुर् देवपुंनागः स्कन्धपुष्पः सुराह्वयः ॥ (१६२.२)

मदहेतुः सिन्धुपुष्पी धातकी मदयन्तिका । (१६३.१)
कुञ्जरा हरिसारा च मदवीर्या मदप्रिया ॥ (१६३.२)

अम्बष्ठादौ स्मृताम्बष्ठा सहस्री बहुमूलकः । (१६४.१)
मधुपर्णी केकिशिखा मयूराह्वा शिखी तथा ॥ (१६४.२)

नन्दीवृक्षः प्ररोही च जयवृक्षेन्द्रवृक्षकौ । (१६५.१)
कच्छुरा पणिहारी च तीक्ष्णपत्त्रा मरुद्भवा ॥ (१६५.२)

मुस्तावचाग्निद्विनिशाद्वितिक्ताभल्लातपाठात्रिफ्हलीविषाख्याः । (१६६.१)
कुष्ठं कुटी हैमवती च योनिस्तन्यामयघ्ना मलपाचनाश् च ॥ (१६६.२)

मुस्तादिके गणे मुस्ता पूर्वम् एव प्रकीर्तिता । (१६७.१)
तिक्ता च कटुका ज्ञेया रोहिणी कटुरोहिणी ॥ (१६७.२)

स्फ्होटशोफ्हक्षतकरं भल्लातकम् अरुष्करम् । (१६८.१)
पाकलं वारि भाव्यं च वाप्यं कुष्ठं गदाह्वयम् ॥ (१६८.२)

न्याग्रोधपप्पलसदाफ्हलरोध्रयुग्मं जम्बुद्वयार्जुनकपीतनसोमवल्काः । (१६९.१)
प्लक्षाम्रवञ्जुलपियालपलाशनन्दीकोलीकदम्बविरलामधुकं मधूकम् ॥ (१६९.२)

न्यग्रोधादिर् गणो व्रण्यः संग्राही भग्नसाधनः । (१७०.१)
मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ॥ (१७०.२)

न्यग्रोधादौ यक्षवासो न्यग्रोधो बहुपाद् वटः । (१७१.१)
अश्वत्थः पिप्पलो बोधिश् चैत्यद्रुश् चलपत्त्रकः ॥ (१७१.२)

उदुम्बरः कृमिफ्हलः सुप्रतिष्ठः सदाफ्हलः । (१७२.१)
बृहत्फ्हला राजजम्बूः काकजम्ब्वल्पसस्यका ॥ (१७२.२)

फ्हलश्रेणी वरः प्रोक्तः कपिचूतः कपीतनः । (१७३.१)
प्लक्षः कुपिप्पलः प्लावो गर्दभाण्डः कपीतनः ॥ (१७३.२)

आम्रश् चूतश् चावतलः कान्तः पिण्डफ्हलस् तथा । (१७४.१)
वसन्तदूती माकन्दा भृङ्गेष्टा कोकिलप्रिया ॥ (१७४.२)

रसालद्रुः सहकारः सौरभः कोकिलप्रियः । (१७५.१)
नादेयो वञ्जुलः प्रोक्तो विदुलो वेतसो ऽपरः ॥ (१७५.२)

प्रियालस् तु खरस्कन्धश् चारो द्राक्षारसप्रियः । (१७६.१)
कर्कन्धूः काष्ठकृत् कोली बदरी युग्मकण्टकः ॥ (१७६.२)

विस्फ्हूर्जनी विकरणी तिन्दुकी विरला स्मृता । (१७७.१)
कालस्कन्धो नीलसारो द्वितीयः काकतिन्दुकः ॥ (१७७.२)

वक्रशल्या कृष्णफ्हला विरला गृध्रनख्य् अपि । (१७८.१)
गन्धयुक्ता सारवस्त्रा दुर्धर्षा कुण्डली स्मृता ॥ (१७८.२)

एलायुग्मतुरुष्ककुष्ठफ्हलिनीमांसीजलध्यामकं स्पृक्काचोरकचोचपत्त्रतगरस्थौणेयजातीरसाः । (१७९.१)
शुक्तिव्याघ्रिनखो ऽमराह्वमगुरुः श्रीवासकः कुङ्कुमं चण्डागुग्गुलदेवधूपखपुराः पुंनागनागाह्वयम् ॥ (१७९.२)

एलादिको वातकफ्हौ विषं विनियच्छति । (१८०.१)
वर्णप्रसादनः कण्डूपिटिकाकोठनाशनः ॥ (१८०.२)

एलादिके पूर्वम् उक्ता सूक्ष्मैलान्या तु कथ्यते । (१८१.१)
भद्रैला बृहदेला तु स्थूलैला त्रिपुटोद्भवा ॥ (१८१.२)

सुहेला च सुषेणी च रेणुका कान्तनामिका । (१८२.१)
पिण्डी तुरुष्कजं तैलं पिरायाकं कृत्रिमं कपिः ॥ (१८२.२)

ह्रीवेरं वारि केशाह्वम् उदीच्यं बालकं जलम् । (१८३.१)
ध्यामकं शबलं गन्धं स्पृक्का देवी लता सती ॥ (१८३.२)

चोरको ग्रन्थिपर्णी स्यात् शटी सोमसमुद्भवा । (१८४.१)
वराङ्गं चर्मनामा च चोचं त्वक् च वराङ्गकम् ॥ (१८४.२)

रोमशं छदनं पत्त्रं तमालं रोमशीफ्हलम् । (१८५.१)
बर्हिष्ठं तगरं वक्रं नतं कालानुसारि च ॥ (१८५.२)

चारटी शुकबर्हाख्यं स्थौणेयं तैलपीतकम् । (१८६.१)
जातीरसो रसो बोलं शुक्तिः कररुहो नखः ॥ (१८६.२)

बदरीपत्त्रकं चैव ज्ञेयो नागहनुस् तथा । (१८७.१)
समुद्रजो व्याघ्रनखो विज्ञेयो व्याघ्रनामकः ॥ (१८७.२)

श्रीवेष्टको वायसको दधिनामा च कीर्तितः । (१८८.१)
काश्मीरं कुङ्कुमं रक्तं वाह्लीकं घुसृणं वरम् ॥ (१८८.२)

क्रोधना पिशुना चण्डा चौरी शङ्खिनिका मता । (१८९.१)
महिषाक्षो निशाचारी कौशिको गुग्गुलुः पुरः ॥ (१८९.२)

रालस् तु देवधूपः स्यात् शालः सर्जरसाह्वयः । (१९०.१)
कुन्दुरुर् मेदकः कुन्द्रो विज्ञेयः खपुरस् तथा ॥ (१९०.२)

श्यामादन्तीद्रवन्तीक्रमुककुटरणाशंखिनी चर्मसाह्वा स्वर्णक्षीरीगवाक्षीशिखरिरजनकच्छिन्नरोहाकरञ्जाः । (१९१.१)
बस्तान्त्री व्याधिघातो तीक्ष्णवृक्षात् प्हलानि श्यामाद्यो हन्ति गुल्मं विषमरुचिकप्हौ हृद्रुजं मूत्रकृच्छ्रम् ॥ (१९१.२)

मसूरविदला श्यामा श्यामादो कालमेषिका । (१९२.१)
सुषेणिका शशाह्वा च कालिन्दी कालिका स्मृता ॥ (१९२.२)

चित्रा मुकूलको दन्ती निकुम्भः शम्बरस् तथा । (१९३.१)
उदुम्बरच्छदा हस्तिदन्ती स्याद् उपचित्रका ॥ (१९३.२)

न्यग्रोधाह्वा सुतत्रेणी द्रवन्त्य् उन्दुरुकर्णिका । (१९४.१)
कुम्भस्त्री भट्टिनी सूत्रा श्यामा कुटरणा त्रिवृत् ॥ (१९४.२)

शङ्खिनी तिक्तला वक्री यवतिक्ता किशोरिका । (१९५.१)
शङ्खावर्ता शङ्खपुष्पी विशिखा नाहिका स्मृता ॥ (१९५.२)

सातला सप्तला चर्मकषाह्वावर्तकी स्मृता । (१९६.१)
अन्येषां तु तथा ब्राह्मी ब्रह्मनामा तु कीर्तिता ॥ (१९६.२)

स्वर्णक्षीरी हैमवती कङ्कुष्ठस् तीक्ष्णदुग्धिका । (१९७.१)
इन्द्रवारुणिका चैन्द्री गवाक्षी गजचिर्भिटी ॥ (१९७.२)

विशाला च विशल्या च सैव प्रोक्ता गवादनी । (१९८.१)
गिरिकर्ण्य् अश्वक्षुरकः स्थाणुकर्णी गवादनी ॥ (१९८.२)

नीलस्यन्दा नीलपुष्पी नीलाख्या गिरिकर्णिका । (१९९.१)
तिल्वकः शिखरी श्वेतत्वक् तिरीटो बृहच्छदः ॥ (१९९.२)

कम्पिल्लको रञ्जनको रेचनो रक्तचूर्णकः । (२००.१)
बस्तान्त्री वृषगन्धाख्या मेषान्त्री वृषपत्त्रिका ॥ (२००.२)

घनभूरिरसस् त्व् इक्षुः गुडमूलो ऽसिपत्त्रकः । (२०१.१)
तीक्ष्णवृक्षः शणः पीलुः प्रोक्तो ऽन्यः स्थाणुकस् तथा ॥ (२०१.२)

गणेषु यानि द्रव्याणि संग्रहे वाल्पसंग्रहे । (२०२.१)
तान्य् उक्तान्य् अभिधीयन्ते विप्रकीर्णान्य् अतः परम् ॥ (२०२.२)

पवित्रपत्त्रा मङ्गल्या शमी लक्ष्मी च केशनुत् । (२०३.१)
सोहला रुदती तन्वी सूक्ष्ममूलापराजिता ॥ (२०३.२)

पानीयो बीजवृक्षस् तु जीववृक्षस् तु पाशिकः । (२०४.१)
शुक्लपुष्पा भूमिलग्ना ह्रस्वाङ्गा शङ्खपुष्पिका ॥ (२०४.२)

सूक्ष्मपत्त्रा सर्पगन्धा सर्पाक्षी रक्तपुष्पिका । (२०५.१)
अन्या तु सुमहाकन्दा नाकुली नकुलप्रिया ॥ (२०५.२)

विष्णुक्रान्ता नीलपुष्पी सतीना छर्दिका तथा । (२०६.१)
वाट्यालकः पीतपुष्पो वाट्या भद्रौदनी बला ॥ (२०६.२)

महाबला वर्षपुष्पी शीतपाकी सुबीजकः । (२०७.१)
वाट्यायनी त्व् अतिबला भारद्वाजी सुपर्णिका ॥ (२०७.२)

रामान्याच्छादनप्हला वाट्या कार्पाससंज्ञका । (२०८.१)
अजटा बहुपत्त्रा च भूधात्री तामलक्य् अपि ॥ (२०८.२)

शीतवीर्यः पर्पटकः तृष्णाघ्नः सूक्ष्मपत्त्रकः । (२०९.१)
त्रायन्ती त्रायमाणा च पालिनी भयनाशिनी ॥ (२०९.२)

दुरालभा धन्वयासो यासो दुःस्पर्शकस् तथा । (२१०.१)
कल्याणलोचनो ज्ञेयो नादेयो जलजम्बुकः ॥ (२१०.२)

महाकदम्बो निचुलो ऽनपायी जलनूपुरः । (२११.१)
किङ्किरातः कर्णिकारो गौरः कनकपुष्पकः ॥ (२११.२)

मन्दारः पारिभद्राह्वो ज्ञेयः कण्टकीकिंशुकः । (२१२.१)
पारिजातश् च रोहीतः प्लीहघ्नो रक्तपुष्पकः ॥ (२१२.२)

शुकनासा तु नलिका शुकघ्राणो ऽल्पनालिका । (२१३.१)
शाकराजो भूतवासो गोजिह्वा कर्कशच्छदा ॥ (२१३.२)

अजाक्षी व्रणनाशिनी कुष्ठघ्नी प्हल्गुवाटिका । (२१४.१)
सिंहास्यः कर्कटश् चैव वृषो वासाटरूषकः ॥ (२१४.२)

अश्मन्तको ऽम्लयोनिश् च ज्ञेयो यमलपत्त्रकः । (२१५.१)
वंशो वेणुर् यवप्हलः सुपर्वा च तृणध्वजः ॥ (२१५.२)

करीरः कीचको मृत्युप्हलाङ्कुर इति स्मृतः । (२१६.१)
वारणस् तरली कुम्भिकरञ्जस् तीरवृक्षकः ॥ (२१६.२)

सिन्धुरः सिन्धुवारश् च श्वेतपुष्पावरोहितः । (२१७.१)
काकोदुम्बरिका प्हल्गुः भद्रोदुम्बरवायसी ॥ (२१७.२)

कालान्त्रदारी कन्थारी प्हणी खदिरवल्ल्य् अपि । (२१८.१)
सिता कुमारिका मल्ली मोहिनी वटपत्त्रिका ॥ (२१८.२)

प्हेनिलो हस्तिकर्कोटः काण्डो बाणः शणः स्मृतः । (२१९.१)
श्लेष्मान्तको बहुप्हलः शैलूषः कान्तवृक्षकः ॥ (२१९.२)

कुद्दालकः कोविदारस् ताम्रपुष्पो युगच्छदः । (२२०.१)
कालकर्णी भूतवल्ली बल्या गन्धाश्वगन्धिका ॥ (२२०.२)

तिन्तिडीकस् तु वृक्षाम्लो बदरी कोलसंज्ञकः । (२२१.१)
कर्कन्धूः ह्रस्वबदरी वसुवृक्षस् तु धन्वनः ॥ (२२१.२)

सहस्रवीर्यस् तीक्ष्णाम्लो वराम्लस् त्व् अम्लवेतसः । (२२२.१)
गोधापदी गोधवल्ली पट्वम्लादित्यनामिका ॥ (२२२.२)

पत्त्रभङ्गो महाश्यामा खराश्वा वृद्धदारुकः । (२२३.१)
दावाग्निदमनी माता क्षुद्रकण्टरिका तथा ॥ (२२३.२)

बर्हिशिखाह्वया गुञ्जा रक्तिका काकणन्तिका । (२२४.१)
श्वेतकाम्भोजिका ध्वाङ्क्षी श्वेतपाकी शिखण्डिका ॥ (२२४.२)

तृतीया कृष्णकाम्भोजी कुणपोकः सुसादनी । (२२५.१)
ज्योतिष्मती कङ्गुणिका पारावतपदी च सा ॥ (२२५.२)

ईश्वरी नागदमनी कीटारिः सर्पगन्धिका । (२२६.१)
अधोमुखा त्व् अवाक्पुष्पी वाराही वनमालिका ॥ (२२६.२)

आरामशीतलो देवो गन्धाढ्यः कुरुमर्दकः । (२२७.१)
नागजिह्वा श्वेतप्हला क्षीरिणी चार्कपुष्पिका ॥ (२२७.२)

निम्बच्छदेन्द्रवल्ली च करभी रुचिरा स्मृता । (२२८.१)
लिखिका भक्तिका भूरी नवनीता प्रकीर्तिता ॥ (२२८.२)

ज्ञेया बदरिकापर्णी पर्णकः पूतिकर्णकः । (२२९.१)
मलयूः वाकुची चैव चन्द्ररेखा त्व् अवल्गुजः ॥ (२२९.२)

चक्षुष्या चारटी ज्ञेया तथारण्यकुलत्थिका । (२३०.१)
अहिमारो ऽरिमेदस् तु पीतदारुर् हरिद्रुमः ॥ (२३०.२)

श्वेतत्वक् तीक्ष्णसारश् च विबुधस् तीक्ष्णसारकः । (२३१.१)
वाप्याह्वं पौष्करं शूलहरं बीजाह्वयं मतम् ॥ (२३१.२)

शरी तु सुव्रता ज्ञेया गन्धाह्वा सोमसम्भवा । (२३२.१)
सहस्रवीर्या गोलोमी सिता दूर्वा च शाद्वलः ॥ (२३२.२)

क्षुद्रवारी दुग्धयुता घटिका छत्रपत्त्रका । (२३३.१)
आघोटको ब्रह्मप्हलो रक्तबिन्दुस् तिलच्छदः ॥ (२३३.२)

अजाक्षी लोमपर्णी च ज्ञेयो मेषविलोचनः । (२३४.१)
महावृक्षो महानीलो भृङ्गाह्वो मार्कवः स्मृतः ॥ (२३४.२)

केशरञ्जनको ज्ञेयो भृङ्गराड् भृङ्गरेणुकः । (२३५.१)
रामाह्वार्कलतारामा तरुणी पुष्पवत्य् अपि ॥ (२३५.२)

सूर्यभक्ता सुखोद्भावा सूर्यावर्ता रविप्रिया । (२३६.१)
हिरण्यपुष्पी खर्जूरी ताडपत्त्री मुसल्य् अपि ॥ (२३६.२)

इक्ष्वालिका तु काकेक्षुः काण्डेक्षुर् वायसेक्षुकः । (२३७.१)
श्वेतचामरकः काशस् तथेक्षुकुसुमश् च सः ॥ (२३७.२)

अध्यण्डेक्षुरकः स्थूलकण्टकः कोकिलाक्षकः । (२३८.१)
उच्चटा चटका ज्ञेया शिखण्ड्य् आस्फोतकः स्मृतः ॥ (२३८.२)

उन्मत्तको मातुलको धुत्तूरो हेमनामकः । (२३९.१)
त्रिपुष्पः कृष्णधुत्तूरः कृष्णपुष्पी च मोहिनी ॥ (२३९.२)

देवदाली च कर्कोटी वेणी जीमूतकः स्मृतः । (२४०.१)
धामार्गवः कोशप्हलो राजकोशातकी स्मृता ॥ (२४०.२)

कटुकोशातकी क्ष्वेडा जालिनी कृतवेधनः । (२४१.१)
कटुकालाम्बुनी तुम्बालाम्बुर् इक्ष्वाकुसंज्ञिका ॥ (२४१.२)

नीलिनी चारटी ज्ञेया नीलिनी नीलपुष्पिका । (२४२.१)
सूक्ष्मपादस् ताम्रचूडो ज्ञेयः कुक्कुटपादिकः ॥ (२४२.२)

गोधूलिका च गोजिह्वा गोजी क्रोष्टुकमूलकः । (२४३.१)
अङ्कोलो गिरिकोलश् च पीतसारो निकोचकः ॥ (२४३.२)

जालारिर् मेहशत्रुश् च बकुली तलपोटकः । (२४४.१)
स्वर्णवर्णाकरः पीतपुष्पको दोहकाह्वयः ॥ (२४४.२)

शणपुष्पी बृहत्पुष्पी शणः घण्टशणः स्मृतः । (२४५.१)
उभातसी रुद्रपत्त्री गोपिका बाणकः स्मृतः ॥ (२४५.२)

सौम्या सुवर्चला ब्राह्मी सोमा ब्रह्मसुवर्चला । (२४६.१)
मण्डूकपर्णी विक्रान्ता चान्या ब्राह्मी वनौषधिः ॥ (२४६.२)

सुतजीवः पुत्रजीवः पवित्रः पुत्रसिद्धिकृत् । (२४७.१)
आवर्तकी चर्मरङ्गा महाजाली विभाण्डिका ॥ (२४७.२)

प्रसारणी सुप्रसरा सारणी सुप्रतानिका । (२४८.१)
हिङ्गुपत्री तु पृथ्वीका बाष्पिका कवरी स्मृता ॥ (२४८.२)

तुम्बुरुस् तीक्ष्णवल्कश् च तीक्ष्णपत्त्रः कुतुम्बुरुः । (२४९.१)
अक्षोडः पर्वतीयश् च फ्लस्नेहो गुडाश्रयः ॥ (२४९.२)

कीरेष्टः कर्परालश् च स्वादुमज्जा पृथुच्छदः । (२५०.१)
अगस्तिको मुनिनामा कुम्भयोनिश् च स स्मृतः ॥ (२५०.२)

अधिच्छत्त्रा कुम्भयोनिः द्रोणपुष्पी कुतुम्बिका । (२५१.१)
कौण्डिन्यश् च महाद्रोणः स्मृतो देवकुतुम्बकः ॥ (२५१.२)

अधिच्छत्त्रा गौतमस्था बालग्रन्थिः प्रकीर्तिता । (२५२.१)
वत्सादनी सुदशाख्या चक्राङ्गी जलशोषकः ॥ (२५२.२)

प्रपुन्नाटस् त्व् एडगजो दद्रुघ्नश् चक्रमर्दकः । (२५३.१)
लक्ष्मणा पुत्रजननी रक्तबिन्दुच्छदा तथा ॥ (२५३.२)

नागिनी शूलिनी नागवल्ली मत्स्यार्जकः स्मृतः । (२५४.१)
शृगालघण्टा वज्राक्षी वज्रवल्ली तु शृङ्खला ॥ (२५४.२)

पलंकषा मूलकं च हिंगुना पुष्करच्छदः । (२५५.१)
दधिपुष्पी तु खट्वाङ्गी खट्वा पर्यङ्कपादिका ॥ (२५५.२)

बिम्बी हा तुण्डिकेरी तिलाख्या फ्लनाभिका । (२५६.१)
उर्वारुः कर्कटी प्रोक्ता लोमशा च प्रकीर्तिता ॥ (२५६.२)

खूर्जरिकस् तु कालिङ्गः मूत्रलं त्रपुसं स्मृतम् । (२५७.१)
कूष्माण्डकी पुष्पलता ककुभाण्डा फ्लोत्तमा ॥ (२५७.२)

गोरक्षतुम्बी गोरक्षी कुम्भालाम्बुर् घटाभिधा । (२५८.१)
चिर्भिटिका चित्रफ्ला चीनारं चिर्भटं स्मृतम् ॥ (२५८.२)

लम्बा पिण्डफ्लेक्ष्वाकुः कटुका क्षत्रियात्मजा । (२५९.१)
महाफ्लेक्षुरा चैव तुम्बिका तिक्तबीजका ॥ (२५९.२)

चुक्रिका चाम्लिका चिञ्चा जीवन्ती तिन्तिडी स्मृता । (२६०.१)
चुक्रिका त्व् अम्लचाङ्गेरी सुनिषण्णदला तथा ॥ (२६०.२)

उपोदकम् उपोदी च क्षुद्रका पोदकी तथा । (२६१.१)
जीवन्तिको रक्तशाकः कलम्बी वल्ल्युपोदकः ॥ (२६१.२)

तण्डुलीयो मेघनादः चिल्ली तु लोमशा स्मृता । (२६२.१)
शितिवारः सूचिपत्त्रः स्वस्तिकः सुनिषण्णकः ॥ (२६२.२)

मत्स्याक्षिकस् तु मत्सीरः पत्तूरः प्रियसत्य् अपि । (२६३.१)
शीघ्रशाखा शाखिनी च महाशाकश् च वास्तुकी ॥ (२६३.२)

श्रावणी स्यात् मुण्डितिका भिक्षुः श्रवणशीर्षका । (२६४.१)
सौम्यगन्धा बर्बरिका तिलपर्णी च सा स्मृता ॥ (२६४.२)

सर्पश् चित्रस् तु नीलाभो भूशाको भूमिकन्दकः । (२६५.१)
रसोनो लशुनो ज्ञेयः पलाण्डुर् मुखदूषणः ॥ (२६५.२)

शतपुष्पा शतच्छत्त्रा मिशिः घोषा शताह्वया । (२६६.१)
मिश्रेया शालिनी शीतशिवारण्या मिशिः स्मृता ॥ (२६६.२)

पृथ्वीका वारिपत्त्रा तु बाष्पिका च स्थलोद्भवा । (२६७.१)
कपित्थो ऽथ दधित्थश् च दुर्मदः सुरभिच्छदः ॥ (२६७.२)

तोयक्षोभकरः कुम्भी वारुणो वृक्षधूमकः । (२६८.१)
मूषिकारिश् चित्रप्हलः करण्डप्हलकश् च सः ॥ (२६८.२)

चोचं चिषु नारिकेलः तुङ्गद्रुः कूर्चशेखरः । (२६९.१)
नीरपूर्णप्हलः शृङ्गी मोचं तु कदलीप्हलम् ॥ (२६९.२)

रम्भा तु कदली मोचा वृत्तपुष्पांशुमत्प्हला । (२७०.१)
करमर्दी क्षीरप्हला श्वेतपुष्पप्हलेति च ॥ (२७०.२)

कृष्णपाकप्हलाविग्नकराम्लाः करमर्दकः । (२७१.१)
मातुलुङ्गो बीजपूरो लुङ्गश् च प्हलपूरकः ॥ (२७१.२)

जम्बीरो जम्भलो जम्भः जम्बो दन्तशठः स्मृतः । (२७२.१)
नारङ्गस् त्वक्सुगन्धाख्य ऐरावतमुखप्रियौ ॥ (२७२.२)

भव्यं भविष्यं चाम्लं च भवं रोमप्हलं मतम् । (२७३.१)
पारावतं रैवतकं लिकुचो लकुचो डहुः ॥ (२७३.२)

पनसः कण्टकिप्हलः चोचो दीर्घप्हलः स्मृतः । (२७४.१)
नलिका सुषिरा शून्या कपोतचरणा नटी ॥ (२७४.२)

स्निग्धवृक्षस्तु सक्षीरः प्लक्षः स्याद् गुडबीजकः । (२७५.१)
कालवृन्ता कुबेराक्षी कुलिङ्गाक्षी च यक्षदृक् ॥ (२७५.२)

उग्रकाण्डः कारवल्ली तोयवल्ली सुकाण्डका । (२७६.१)
पञ्चाङ्गुली लिङ्गबीजा राजिका पिण्डवत्प्हला ॥ (२७६.२)

तुर्यतुण्डी शिलाच्छेदी पूतिका नित्यपुष्पिका । (२७७.१)
पर्वमञ्जरिका कीटहन्त्री वृश्चिकहारिणी ॥ (२७७.२)

कुमारी व्याघ्रचरणा कन्या स्थूलदला च सा । (२७८.१)
बन्धूको बन्धुजीवश्च पार्वको वृकधूमकः ॥ (२७८.२)

कृष्णनीलः कालशाखः कैडर्यः सुरभिच्छदः । (२७९.१)
विश्वरूपा रूप्यगण्डा रूप्यो हरिततुम्बिली ॥ (२७९.२)

अर्शोघ्नश् चाखुकन्दश्च वन्यकन्दश् च शूरणः । (२८०.१)
रक्तपादी शमीपत्त्रा लज्जा लोहितयष्टिका ॥ (२८०.२)

दुरारोहा खरस्कन्धा खर्जूरी स्वादुमस्तका । (२८१.१)
हिन्ताली तु महाताली कुताली तिलपुष्पिका ॥ (२८१.२)

बहुस्कन्धा मृत्युप्हला गूढपाकी शिलाप्हला । (२८२.१)
जतुवृक्षो घनस्कन्धः क्रिमिवृक्षः कुशाम्रकः ॥ (२८२.२)

नीलपत्त्री कालनीली नीलिनी नीलपुष्पिका । (२८३.१)
काकजङ्घा ध्वाङ्क्षजङ्घा दासी कान्ता प्रचीबला ॥ (२८३.२)

शरपुङ्खा बाणपुङ्खा मणिका चेक्षुपुङ्खिका । (२८४.१)
पुत्रदात्री वृत्तपत्त्रा वातारिः श्वेतपुष्पिका ॥ (२८४.२)

तालीशपत्त्रं तालीशं तालमामलकीदलम् । (२८५.१)
श्वासद्रुमः काकतरुः रुग्योग्यो व्याघ्रपर्ण्यपि ॥ (२८५.२)

कुब्जपुष्पा कृष्णवल्ली महानीला प्रतानिका । (२८६.१)
मृदुकान्तिः महाश्वेता श्वेता तु खटिका स्मृता ॥ (२८६.२)

रक्तपाषाणको धातुः गिरिमृद् गैरिकः स्मृतः । (२८७.१)
स्तन्याख्यो दुग्धपाषाणः सौधः पाषाणको लवः ॥ (२८७.२)

सौगन्धिको गन्धकस्तु वैगन्धो गन्धको बलिः । (२८८.१)
मनःशिला मनोगुप्ता मनोह्वा कुनटी शिला ॥ (२८८.२)

हरितालमालं तालं गोदन्तं नटभूषणम् । (२८९.१)
पारदो रसधातुश्च रुद्ररेता महारसः ॥ (२८९.२)

रसेन्द्रश्चपलः सूतो हरयोनी रसोत्तमः । (२९०.१)
अभ्रकं पार्वतीबीजं शैलोद्भूतं तथाम्बरम् ॥ (२९०.२)

मयूरग्रीविकं तु स्यात् शिखिकण्ठं च तुत्थकम् । (२९१.१)
अन्यत् कर्परिका तुत्थं वामनं तुत्थमेव तु ॥ (२९१.२)

हिङ्गुलं दरदं म्लेच्छं रसभूः चर्मरञ्जनम् । (२९२.१)
सिन्दूरं रक्तरेणु श्रीभूषणं नागसम्भवम् ॥ (२९२.२)

सौवर्चलं तु रुचकम् अक्षाह्वं कृष्णसंज्ञकम् । (२९३.१)
विडं तु कृत्रिमं प्रोक्तं पृथ्वीसंभवम् औद्भिदम् ॥ (२९३.२)

समुद्रजं च सामुद्रं लवणं पटुनामकम् । (२९४.१)
यावशूको यवक्षारः स्रोतोघ्नस्तु सुवर्चिकः ॥ (२९४.२)

सौभाग्यं टङ्कणं क्षारः मालतीरससम्भवः । (२९५.१)
तापीसमुद्भवं ताप्यं माक्षिकं हैममाक्षिकम् ॥ (२९५.२)

जत्वश्मजं धातुजं च शिलाकर्पूरसंज्ञकम् । (२९६.१)
गोरोचना बदरिका सौराष्ट्री रोचना शिवा ॥ (२९६.२)

लाक्षा दीप्तिर्द्रुमव्याधिः क्रिमिजा लोहिता जतु । (२९७.१)
पदमौत्तरं तालकुम्भो यावकोऽलक्तकः स्मृतः ॥ (२९७.२)

मृगनाभिर्मृगमदः कस्तूरी दर्पसंज्ञकः । (२९८.१)
लताकस्तूरिका राली गन्धवेणी मुखप्रिया ॥ (२९८.२)

घनसारो हिमराजः कर्पूरं हिमनामकम् । (२९९.१)
मृगस्वेदो मृगजलं पूतिः पूत्यण्डजः स्मृतः ॥ (२९९.२)

जातीप्हलं मज्जसारं जातिका जातिपत्त्रकः । (३००.१)
कक्कोलकं कोशप्हलं कोलकं बहुबीजकम् ॥ (३००.२)

प्हलं द्वीपमरीचं च कटुकं कटुकीप्हलम् । (३०१.१)
लवंगं देवकुसुमं कुसुमं शेखरं लवम् ॥ (३०१.२)

निष्पत्त्रं च महापुष्पं स्वर्गपुष्पं वरालकम् । (३०२.१)
शिलापुष्पं तु शैलेयं शिलाजं स्थविरं तथा ॥ (३०२.२)

पुष्पाञ्जनं रीतिपुष्पं पुष्पकेतुश्च रीतिजम् । (३०३.१)
समुद्रफेनं शुष्कं च फेनं वारिधिजं मलम् ॥ (३०३.२)

शङ्खो वारिभवः कम्बुः जलजो दीर्घनिःस्वनः । (३०४.१)
प्रवालं वल्लिजं रक्तं विद्रुमं च प्रकीर्तितम् ॥ (३०४.२)

रूप्यकं रजतं तारं सुवर्णं कनकं स्मृतम् । (३०५.१)
जातरूपं तथा हेम शातकुम्भं च हाटकम् ॥ (३०५.२)

जाम्बूनदं हिरण्यं च तपनीयं च काञ्चनम् । (३०६.१)
ताम्रमौदुम्बरं शुल्बं मिहिरं हरिनामकम् ॥ (३०६.२)

रीतिका पित्तलं पूति पीतलोहं च सैंहलम् । (३०७.१)
त्रपुसं त्रपुसंज्ञं च तगरं रूप्यशत्रुकः ॥ (३०७.२)

सीसकं नागमुरगं कांस्यं काशं च घोषकम् । (३०८.१)
वार्त्तालोहं वर्तलोहं त्रिलोहं पञ्चलोहकम् ॥ (३०८.२)

कृष्णलोहमयः सारमायसं च शिलोद्भवम् । (३०९.१)
अयोरजो लोहरजस् तत् किट्टं स्याद् अयोमलम् ॥ (३०९.२)

चिपिटं चिप्पटं चिट्टं वालुका सिकता स्मृता । (३१०.१)
लोहकान्तमयस्कान्तं कान्तं भ्रामरचुम्बकम् ॥ (३१०.२)

मृदुलोहं तीक्ष्णलोहं तीक्ष्णाख्यं सूक्ष्मलोहकम् । (३११.१)
कालकूटो महामुस्तो वत्सनाभो हलाहलः ॥ (३११.२)

वत्सदन्ती महाशृङ्गी लेलिहस् तालपत्त्रकः । (३१२.१)
विषं च मूलकं शृङ्गी गरं कृत्रिमसंज्ञकम् ॥ (३१२.२)

तोयच्छदा वारिपर्णी कुम्भिका जलकुम्भिका । (३१३.१)
दीर्घमूलं जलावासं शैवालं जलसम्भवम् ॥ (३१३.२)

पङ्कजं पुण्डरीकं च शतपत्त्रं कुशेशयम् । (३१४.१)
बिसप्रसूनराजीवजलजाम्भोरुहाणि च ॥ (३१४.२)

शशिप्रियं च गन्धाढ्यं कुमुदं कोकनन्दनम् । (३१५.१)
काकोत्पलं तु काकोत्थं काकाख्यं ह्रस्वमुत्पलम् ॥ (३१५.२)

तेषां फलं तु कुम्भीकं मूलं शालूककन्दकम् । (३१६.१)
कशेरुकः सुगन्धिश्च सुकन्दो मुस्तकन्दकः ॥ (३१६.२)

शृङ्गाटको जलफलं जलकन्दस् त्रिकोणकः । (३१७.१)
करवीरो ऽश्वमारस्तु बकुलं मद्यकेसरम् ॥ (३१७.२)

अलक्ता माल्यशेफाली रूपिका ताम्रपुष्पिका । (३१८.१)
रक्तपुष्पी जया रुद्राम्लायनी वनमालिका ॥ (३१८.२)

आम्लायनो राजसैर्यः कोरण्डो नखरञ्जनः । (३१९.१)
तिलकः पूर्णकः श्रीमान् सुद्युतिः शुक्लपुष्पकः ॥ (३१९.२)

मालती सुमना जाती यूथिका गन्धनामिका । (३२०.१)
मल्लिकोक्ता विचकिला द्विपुष्पी पुष्पटी तथा ॥ (३२०.२)

कुञ्जरः शतपत्त्रश्च कण्टकाढ्यश्च कुब्जकः । (३२१.१)
अट्टहासः शङ्खशुक्ला नाम्ना सा शङ्खयूथिका ॥ (३२१.२)

ऋषिर् दमनको दान्तो विनीतः कुलपत्त्रकः । (३२२.१)
दमनः पाण्डुरागः स्यात्तथा गन्धोत्कटो मुनिः ॥ (३२२.२)

पानीयमम्बु सलिलं तोयं चोदकवारिणी । (३२३.१)
पयः कीलालममृतं जीवनं भुवनं वनम् ॥ (३२३.२)

क्षीरं स्वादु पयो दुग्धं स्तन्यं वारि स्तनोद्भवम् । (३२४.१)
दधि माङ्गल्यकं चैव संतानं स्तनिका स्मृता ॥ (३२४.२)

घोषं दण्डाहतं तक्रं कालशेयमुदाहृतम् । (३२५.१)
घृतमाज्यं हविः सर्पिः नवनीतं घृतालयः ॥ (३२५.२)

गुडस्त्विक्षुविकारः स्यात् खण्डं प्हुल्लमिति स्मृतम् । (३२६.१)
सितोपला शर्करा च सिता मत्स्यण्डिका स्मृता ॥ (३२६.२)

माक्षिकं सारघं क्षौद्रं मधु पुष्परसोद्भवम् । (३२७.१)
मधूच्छिष्टं च मदनं सिक्थकं मक्षिकामलम् ॥ (३२७.२)

तैलम् अभ्यञ्जनवरं तिलजं तिलसम्भवम् । (३२८.१)
प्रसन्ना वारुणी ज्ञेया परिस्विन्ना च सा स्मृता ॥ (३२८.२)

कादम्बरी घना सुरा मैरेयो ह्य् आसवो मदः । (३२९.१)
मार्द्वीकं मधु विज्ञेयं माध्वीकं मधुना कृतम् ॥ (३२९.२)

गुडेन गौडं सितया शार्करं सैन्धम् ऐक्षवम् । (३३०.१)
खण्डेन खण्डवासः स्यात् पैष्टकं पिष्टसम्भवम् ॥ (३३०.२)

अवन्तिसोमो धान्याम्लम् आरनालं च काञ्जिकम् । (३३१.१)
शुक्तं सौवीरकं चेति तुषोदं तु तुषोदकम् ॥ (३३१.२)

यवोत्थं तण्डुलोदं च रसाम्लं शुक्तकाञ्जिकम् । (३३२.१)
ब्रह्माम्बु गोम्बु गोमूत्रं गोमलं गोमयं स्मृतम् ॥ (३३२.२)

शालिर् व्रीहिर् वरश्चैव धान्यकं रक्तशूकरः । (३३३.१)
यवश्च स्थूलमध्यश्च वरुणो मुनिभिक्षितः ॥ (३३३.२)

अकृष्टपच्यो नीवारः शकुन्तमुनिभोजनम् । (३३४.१)
चणकस्तु कलायः स्याद् गोधूमो म्लेच्छभोजनः ॥ (३३४.२)

चमसी चातिबीजा स्यात् कोरदूषस्तु कोद्रवः । (३३५.१)
कङ्गुः संध्यन्थिसंबन्धी प्रियङ्गुः पीततण्डुलः ॥ (३३५.२)

गवेधुका च गोजिह्वा कर्शनीया सिता तथा । (३३६.१)
उद्दालकस्तु जूर्णाह्वो यावनालः शुकप्रियः ॥ (३३६.२)

वासन्तः कृष्णमुद्गस्तु माधवश्च सुराष्ट्रजः । (३३७.१)
मकुष्ठो वनमुद्गश्च मसूरः पित्तभेषजम् ॥ (३३७.२)

हरिमन्थाः सुगन्धाश्च चणकाः कृष्णकञ्चुकाः । (३३८.१)
कुलत्थः कालवृत्तश्च ताम्रवर्णो ऽनिलापहा ॥ (३३८.२)

माषस्तु पिच्छिलरसः कुरुविन्दो वृषाकरः । (३३९.१)
राजमाषो ऽलसान्द्रः स्यात् खञ्जकाख्यः कलायकः ॥ (३३९.२)

आढकी तुवरी प्रोक्ता निष्पावा शिम्बिका स्मृता । (३४०.१)
तिलः स्नेहप्हलः स्नेहपूर्णश्च कृष्णतैलकः ॥ (३४०.२)

फलत्रयं तु त्रिफला वरा श्रेष्ठा तथोत्तमा । (३४१.१)
द्विपं च मूलं दशकं दशमूलं दशाङ्घ्रिकम् ॥ (३४१.२)

त्रिकटु त्र्यूषणं व्योषं कटुत्रयम् इहोच्यते । (३४२.१)
पञ्चकोलं पञ्चकटु त्रिसुगन्धि त्रिजातकम् ॥ (३४२.२)

औषधं भेषजं पथ्यम् अगदं च भिषग्जितम् । (३४३.१)
कलभो वारणो दन्ती मातंगो द्विरदो द्विपः ॥ (३४३.२)

गजो हस्ती करीभश् च करेणुर् हस्तिनी स्मृता । (३४४.१)
हयो ऽश्वस् तुरगो वाजी सप्तिर् वाहस् तु बाडवः ॥ (३४४.२)

बालेयो रासभो ज्ञेयो धूसरो गर्दभः खरः । (३४५.१)
करभो दीर्घगश् चोष्ट्रः क्षमी वेसरको बली ॥ (३४५.२)

शार्दूलश् चित्रकायस्तु व्याघ्रः स्यात् पुण्डरीकः । (३४६.१)
पञ्चास्यो मृगराट् सिंहो हर्यक्षः केसरी हरिः ॥ (३४६.२)

कण्ठीरवश्च विज्ञेयः पिङ्गदृष्टिर् मृगादनः । (३४७.१)
मृगे कुरङ्गवातायुहरिणाजिनयोनयः ॥ (३४७.२)

ताम्राभो हरिणः कृष्णस् त्व् एणस् त्वक्कोमलः स्मृतः । (३४८.१)
कृष्णसारश्चित्रमृगः रोमशा चमरी स्मृता ॥ (३४८.२)

वराहः शूकरः कीटी दंष्ट्री घोणी च रोमशः । (३४९.१)
स्तब्धरोमा पृथुस्कन्धः क्रोडः कोलस्तथा किरिः ॥ (३४९.२)

कपिः प्लवंगप्लवगशाखामृगवलीमुखाः । (३५०.१)
मर्कटो वानरः कीशः वनौकाः फलभक्षकः ॥ (३५०.२)

शृगालो जम्बुकः क्रोष्टा गोमायुर् मृगधूर्तकः । (३५१.१)
पारावतः कलरवो गेहपक्षी कपोतकः ॥ (३५१.२)

कृकवाकुस् ताम्रचूडः कुक्कुटश्चरणायुधः । (३५२.१)
मयूरो बर्हिणो बर्ही नीलकण्ठो भुजंगभुक् ॥ (३५२.२)

शिखावलः शिखी केकी कलापी मेघनादिनी । (३५३.१)
उलूको वायसारिस्तु कौशिको रजनीचरः ॥ (३५३.२)

काकस्तु करटोऽरिष्टः बलिपुष्टः सकृत्प्रजः । (३५४.१)
परभूर् बलिभुग् ध्वाङ्क्षश्चिरजीवी च वायसः ॥ (३५४.२)

एकदृष्टिश् चात्मघोषः द्रोणकाकस्तु कृष्टलः । (३५५.१)
चटकः कलविङ्कश्च कुलिङ्गश् चटकापि च ॥ (३५५.२)

विज्ञेयश् चर्मपथिकः जातुषश् चर्मसाह्वयः । (३५६.१)
भरद्वाजो द्विजो ब्राह्मो व्याघ्राटः खञ्जरीटकः ॥ (३५६.२)

सारङ्गः खञ्जनश्चैव मेघवृत्तिस्तु चातकः । (३५७.१)
वनप्रियः परभृतः कोकिलः सुस्वरः पिकः ॥ (३५७.२)

गूढपात् कच्छपः कूर्मः कुलीरः कर्कटः स्मृतः । (३५८.१)
शम्बूको वृत्तशङ्खश्च शङ्खको मातृगेहकः ॥ (३५८.२)

मीनो मत्स्यो ऽण्डजश्चैव जलौका जलशायनः । (३५९.१)
मण्डूको दर्दुरो भेकः काकाहिस् तोयसर्पकः ॥ (३५९.२)

सर्पः पृदाकुर्भुजगो भुजंगो ऽहिर् भुजंगमः । (३६०.१)
आशीविषो विषधरश्चक्री व्यालः सरीसृपः ॥ (३६०.२)

कुण्डली गूढपाच् चक्षुःश्रवाः काकोदरः फ्हणी । (३६१.१)
दर्वीकरो दीर्घपृष्ठो जिह्मगः पवनाशनः ॥ (३६१.२)

लेलिहानो दन्दशूको द्विजिह्वश्च बिलेशयः । (३६२.१)
कृकलासो मयूरादी कालेयो बहुपन्नगः ॥ (३६२.२)

शतपात् सरटा चक्री नकुलः सर्पभक्षकः । (३६३.१)
नालिनी नालहूलीका तलाटा स्थूलदन्तिका ॥ (३६३.२)

आखून्दुरुर् मूषकश्च वृकश्च दूषकः स्मृतः । (३६४.१)
छुछुन्दरी राजपुत्री विज्ञेया गन्धमूषिका ॥ (३६४.२)

पुरोहिता कुड्यमत्स्या गौरी च गृहगोधिका । (३६५.१)
गौधेरकाकृतिर्गोधा प्राग्बाहुर् युग्मजिह्वकः ॥ (३६५.२)

ओतुर् बिडालो मार्जारो वृषदंशक आखुभुक् । (३६६.१)
उदङ्घा कपिजङ्घा तु लोहिताङ्गः पिपीलकः ॥ (३६६.२)

गण्डूपदा भूमिलता भूनागो वर्षजालकः । (३६७.१)
मधुयुतो मधुकरो मधुलिट् मधुपस्तथा ॥ (३६७.२)

द्विरेफ्हः पुष्पलिड् भृङ्गः षट्पदभ्रमरावलिः । (३६८.१)
इन्दिन्दिरश् चञ्चरीकः सरघा मधुमक्षिका ॥ (३६८.२)

लम्बरोमा मक्षिका च परा दीपनिवारणी । (३६९.१)
पतंगिका पुत्तिका स्यात् दंशस्तु वनमक्षिका ॥ (३६९.२)

भृङ्गारी चीरुका चीरी झिल्लिका घर्घरस्वना । (३७०.१)
पतंगः शलभो ज्ञेयः स्वद्योतो ज्योतिरिङ्गणः ॥ (३७०.२)

लुलायो महिषो वाहद्वेषी कासरसैरिभौ । (३७१.१)
वन्यस्तु गवयो ज्ञेयः ककुद्मान् गोपतिर्वृषः ॥ (३७१.२)

अड्वान् बलीवर्दः सुरभिर्गोपकः स्मृतः । (३७२.१)
सकृत्प्रसूता गृष्टिः स्यात् बष्कयण्य् एकहायनी ॥ (३७२.२)

अन्नसारो रसो रक्तयोनिः स्याद् दृढधातुकः । (३७३.१)
रक्तं शोणं मांसकरं शोणितं क्षतजम् असृक् ॥ (३७३.२)

पलं मांसं शोणितोत्थं पिशितं क्रव्यम् आमिषम् । (३७४.१)
पिच्छा मांसोद्भवं मेदो वसा मेदःसमुद्भवा ॥ (३७४.२)

मेदःसम्भवम् अस्थि स्याद्देहसंधानधारणम् । (३७५.१)
अस्थिसारस्तथा मज्जा स्नेहसारो ऽस्थिसम्भवः ॥ (३७५.२)

शुक्लं तेजो बीजपुंस्त्वे रेतो वीर्यान्त्यधातुके । (३७६.१)
ओजस्तु धातुसारः स्यात् सौम्यो हृदयदीपनः ॥ (३७६.२)

अनिलो मारुतो वायुः मरुत्प्राणः प्रभञ्जनः । (३७७.१)
समीरणो मातरिश्वा पवनश्च सदागतिः ॥ (३७७.२)

मायुः पित्तं वह्निकान्तं कफ्हः श्लेष्मा च पिच्छिलः । (३७८.१)
कर्दमः पङ्कजम्बालौ मृत्सा मृत्स्ना च मृत्तिका ॥ (३७८.२)

हसन्तिकाङ्गारधानी तैलपात्रं कुतूः स्मृता । (३७९.१)
पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ॥ (३७९.२)

पृथ्वी वसुंधराख्या च गौर् भूमिर् मेदिनी मही । (३८०.१)
धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः ॥ (३८०.२)

सर्वंसहा वसुमती वसुधोर्व्यचला स्मृता । (३८१.१)
विश्वम्भरा रसानन्ता गोत्रा कुः पृथिवी क्षमा ॥ (३८१.२)

अवनी भूतधात्री च विपुला सागराम्बरा । (३८२.१)
सूरो हंसो रविर्भानुः पतंगोऽर्को दिवाकरः ॥ (३८२.२)

प्रद्योतनो दिनमणिः खद्योतो द्युमणिस्तथा ॥ (३८३.०)
ब्रध्नः प्रभाकरो भास्वान् द्वादशात्मा दिवाकरः । (३८४.१)
सविता च सहस्रांशुर् मार्तण्डश्च विकर्तनः ॥ (३८४.२)

कर्मसाक्षी जगच्चक्षुरंशुमाली त्रयीतनुः । (३८५.१)
विभावसुर्ग्रहपतिस् त्विषांपतिर् अहर्पतिः ॥ (३८५.२)

शीतांशुरिन्दुश्चन्द्रमाः शशी चन्द्रो निशाकरः । (३८६.१)
विधुः सुधांशुः शुभ्रांशुर् ओषधीशो निशापतिः ॥ (३८६.२)

अब्जो जैवातृकः सोमो ग्लौर् मृगाङ्कः कलानिधिः । (३८७.१)
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ॥ (३८७.२)

अङ्गारकः कुजो भौमो रौहिणेयो बुधो द्विजः । (३८८.१)
गुरुर्बृहस्पतिर्मन्त्री चोशना भार्गवः कविः ॥ (३८८.२)

शनिः पङ्गुः सूर्यपुत्रः सैंहिकेयो विधुंतुदः । (३८९.१)
तमस्तु राहुः स्वर्भानुः केतुस्तु ध्वजनामकः ॥ (३८९.२)

उडु नक्षत्रमृक्षं भं दोषा नक्तं निशा क्षपा । (३९०.१)
क्षणदा यामिनी रात्रिस्त्रियामा चोरवल्लभा ॥ (३९०.२)

दिनाहनी वासरश्च घस्रो भास्करवल्लभः । (३९१.१)
शम्भुर् ईशः पशुपतिः शिवः शूली महेश्वरः ॥ (३९१.२)

ईश्वरः शर्वः ईशानः शंकरश् चन्द्रशेखरः । (३९२.१)
भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ॥ (३९२.२)

मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः । (३९३.१)
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ॥ (३९३.२)

वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः । (३९४.१)
कृशानुरेताः सर्वज्ञो धूर्जटिर् नीललोहितः ॥ (३९४.२)

हरः स्मरहरो भर्गस् त्र्यम्बकस्त्रिपुरान्तकः । (३९५.१)
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ॥ (३९५.२)

व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः । (३९६.१)
उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥ (३९६.२)

शिवापर्णा भवानी च पार्वती चण्डिकाम्बिका । (३९७.१)
अजो हरिर्वासुदेवो दैत्यारिः पुरुषोत्तमः ॥ (३९७.२)

विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः । (३९८.१)
दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ (३९८.२)

पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः । (३९९.१)
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ॥ (३९९.२)

लक्ष्मी पद्मालया पद्मा कमला श्रीर् हरिप्रिया । (४००.१)
इन्दिरा लोकमाता मा क्षीराब्धितनया रमा ॥ (४००.२)

नेत्रं पादः शिफा चाङ्घ्रिः मूलं शालूककन्दकौ । (४०१.१)
त्वक् चर्म वल्कलं प्रोक्तं विटपः शिखरं शिरः ॥ (४०१.२)

पत्त्रं दलं छदः पर्णं पलाशश्छदनं तथा । (४०२.१)
पल्लवस्तु प्रवालः स्यात् मुकुलं कोरकं स्मृतम् ॥ (४०२.२)

कलिका जालकश्चैव कोरकक्षारकुड्मलाः । (४०३.१)
प्रसूनं सुमनः सूनं पुष्पं च कुसुमं स्मृतम् ॥ (४०३.२)

आमं शलाटुसंज्ञं तु पक्वं फ्हलमुदाहृतम् । (४०४.१)
मकरन्दः पुष्परसः दलोत्थो दलजो रसः ॥ (४०४.२)

औषधं भेषजं पथ्यमगदं च भिषग्जितम् । (४०५.१)
क्रिया चिकित्सितं शस्त्रं प्रायश्चित्तं समाहितम् ॥ (४०५.२)

रोगहारो ऽगदंकारो भिषग् वैद्यश्चिकित्सकः । (४०६.१)
रोगज्ञो जीवनो विद्वानायुर्वेदी गदान्तकः ॥ (४०६.२)

शीतांश्वमृतलक्ष्मीभिर् जुष्टोऽसौ धनसंयुतः । (४०७.१)
क्षीरोधिजश् चाब्जयोनिः पायाद् धन्वन्तरिस्तथा ॥ (४०७.२)

नासत्याव् अश्विनौ दस्राव् आश्विनेयौ च ताव् उभौ । (४०८.१)
रक्षतां देवभिषजौ वैद्यपुत्रान् स्वरोचिषा ॥ (४०८.२)